# सत्यभामापरिग्रहम्

## काव्यम् ।

परशुरामचरित, रुक्मिणीहरण, सुभद्राहरणप्रभृति

काव्यरचयित्रा

एम्, ए, कविभूषणोपाधिना

हेमचन्द्ररायेण कृतम् ।

पाबनावास्तव्येन तेनैव प्रकाशितम् ।

"तत्रैव गङ्गा यमुना च तत्र
गोदावरी तत्र सरस्वती च ।
सर्व्वाणि तीर्थानि वसन्ति तत्र
यत्राच्युतोदारकथाप्रसङ्गः ॥"

पाण्डवगीता ।



संवत् १९७२ ।

मूल्यं रजतपादमात्रम् ।

# ग्रन्थकृतो मङ्गलाचरणमात्मनिवेदनञ्च ।

देवीं गामुद्वहन् साक्षात् सत्यभामापरिग्रहे ।
पुमाञ्जयति वैदर्भ्या लक्ष्म्या सासूयमीक्षितः ॥ १

पवित्राभिः पल्लवितं कथाभिः कमलापतेः ।
दातारं निर्वृतिफलं भजे भागवतद्रुमम् ॥ २

भूमिकल्पलतां वन्दे पुराणकविभारतीम् ।
छाया यस्याः सदा सेव्या नव्यैः काव्यफलेप्सुभिः ॥ ३

कोऽयमुत्पात इत्यन्यैराक्षिप्तोऽपि नवोदयः ।
कविः केतुरिव कस्यापि कौतुकं कुरुतेतराम् ॥ ४

क्षुद्रे नवेऽपि काव्येऽस्मिन् सत्यभामापरिग्रहे ।
सन्तु सन्तः सहृदयाः प्रमाणं गुणदोषयोः ॥ ५

# सत्यभामापरिग्रहम्

## काव्यम् ।

### प्रथमः सर्गः

श्रियः पतिर्द्वारवतीमधिश्री-
रधिष्ठितः सर्व्वजगत्प्रतिष्ठः ।
यशोधनः पौरवचःप्रवृत्तिं
चारं स्वचारित्रगतामपृच्छत् ॥ १

कृतप्रणामः प्रभवे विधिज्ञः
प्रियं स साधुः प्रथमं निवेद्य ।
तथ्यं क्रमादप्रियमप्यशंसद्
यथावदाख्यानपरो हि चारः ॥ २

स्वयं वसत्यत्र जगन्निवासे
नाथे यदूनां त्वयि लोकनाथे ।
स्वर्लोकलक्ष्मीमधरीकृताया-
मुपैति किन्नाम जनो न सौख्यम् ॥ ३

आरोग्यमानृण्यमविप्रयोगं
को नाम नात्रानुभवत्यखेदम् ।
न पश्यतां विस्मयभूमयोऽस्मि-
न्ननीतयो नीतिपराः प्रजास्ते ॥ ४

न तापमत्यर्थमिहातनोति
भानुस्तुषारश्च न शीतरश्मिः ।
वर्षत्यकाले न च वारिवाहो
न कर्कशं वाति समीरणोऽपि ॥ ५

यादःपतिः स्वेन वपुर्महिम्ना
व्रजन् पुरस्ते परिखोपयोगम् ।
गृहे गृहे पश्य तरङ्गहस्तै-
रनारतं यच्छति रत्नजातम् ॥ ६

गुर्व्या जरासन्धभियाभिभूतां
श्रियं यदूनामविभर्यदूनाम् ।
सा त्वन्नयेनोपचिता तदृद्धिं
पौरन्दरीमप्यधुनातिशेते ॥ ७

मलीमसैर्वेश्मनि यज्ञधूमैः
प्रयाणमार्गे बलरेणुभिश्च ।
निघातनाराचशतैश्च सङ्ख्ये
प्रसारितं दिक्षु सितं यशस्ते ॥ ८

कीर्त्तिप्रतापैकनिधौ जनानां
विनेतरि क्षेमविधानदक्षे ।
त्वय्यर्पितश्रीभरमुग्रसेनं
विविक्तविश्रान्तिरसः श्रितोऽद्य ॥ ६

सह्यानयं किन्तु मनोज्वरो नः
कीर्त्तिं प्रभो यद्भवतोऽवदाताम् ।
आरोपितः पौरजनैरिदानीं
कलङ्कपङ्को मलिनीकरोति ॥ १०

विधेर्विधानं ह्यमद्य शोच्यं
मूर्त्तिर्निरङ्का न च यत् सुधांशोः ।
वचोऽतिगश्लाघ्यगुणैकधाम्नि
त्वयीदृशे यच्च जनापवादः ॥ ११

को वाधिगच्छन् मनुजाधिपत्य-
मेकान्ततो वाच्यविवर्ज्जितोऽभूत् ।
साध्वीति गृह्णन् वनितां विशुद्धां
न निन्दितः किं रघुनन्दनोऽपि ॥ १२

कामं तदस्त्वल्पमतथ्यमेव
तव त्वलं दूषयितुं यशांसि ।
सङ्गो गुणानां गणनां तथा न
यथेह वाच्यस्य लवोऽपि यायात् ॥ १३

पौरेष्ववर्णं बहुलीभवन्तं
कर्णान्तवादी तु नयाम्यहं यत् ।
त्वत्स्वामिकेनाप्यनुभूयते त-
न्मयाद्य कष्टः खलु भृत्यभावः ॥ १४

आदित्यमैत्रीफलपाकभूतः
सत्राजिता पूर्व्वमुपार्ज्जितो यः ।
स्फुरत्प्रभामण्डलदुर्निरीक्ष्यः
स्यमन्तकाख्यो मणिरप्रमेयः ॥१५

धृतः सदाचाररतेन पुंसा
सर्व्वापदां यः प्रशमं विधत्ते ।
अष्टौ च भारान् नियमेन हेम्नः
सूतेऽन्वहं, सोऽद्य मणिः प्रनष्टः ॥ १६ युग्मम् ।

सौभ्रात्रलब्धं मृगयाविहारी
तं कण्ठमारोप्य वनं हयेन ।
गतः प्रसेनो न पुनर्निवृत्तः
प्रवर्त्तते तत्त्वयि किंवदन्ती ॥ १७

अभ्यर्थितो रत्नविशेषभाजे
त्वया हि गोष्ठीपतये यदूनाम् ।
मणिं न सत्राजिददादतस्त्वं
हत्वा प्रसेनं हृतवानसीति ॥ १८

मणिप्रणाशक्षुभितान्तरात्मा
दोषैकदृक्त्वं प्रथयञ्जनेषु ।
मिथ्यापवादं प्रथमं स तावत्
सत्राजिदत्राचरदप्रियन्ते ॥ १९

स्यमन्तकादप्यधिकन्तदीयं
कन्याभिधानं कमनीयमीप्सुः ।
अक्रूरमुख्योऽप्यनुमोदते तं
भोजान्वयः, स्वार्थपरो हि लोकः ॥ २०

तस्येङ्गितेनाद्य बलान्वितस्य
लोकास्यरङ्गेषु कथाप्रसङ्गे ।
तवापकीर्त्तिः पुरि नर्त्तकीव
प्रवर्त्तते वीतभया विहर्त्तुम् ॥ २१

कार्य्योपदेशस्त्वयि यादवेन्द्र
न युज्यते यद्यपि मद्विधानाम् ।
तथापि ते नाथ यशोवितान
मालिन्यमादर्श इवामतं नः ॥ २२

एतावदुक्त्वा विरतेऽथ चारे
विचारदृक् तस्य वचोऽवधाय ।
कलङ्कितं वीक्ष्य यशःशरीरं
स विव्यथे किञ्चिदिवाच्युतोऽन्तः ॥ २३

आकस्मिकः कीर्त्तिविपर्य्ययोऽसौ
प्रभञ्जनः सिन्धुमिवाप्रधृष्यम् ।
अगाधसत्त्वं कमपि क्षणेन
निनाय तं क्षोभमभूतपूर्व्वम् ॥ २४

अहो अतथ्योऽपि हरत्यकाण्डे
महाप्रभावो महिमानमुच्चैः ।
महाजनस्यापि जनापवादः,
स पीड़ितो येन जनार्द्दनोऽपि ॥ २५

अथायशस्यन्तमरुन्तुदञ्च
यत्नेन तावत् परिमार्ष्टुमिच्छन् ।
सिंहासनादुच्चलितो नृसिंहः
सद्यः सदोमण्डपमाससाद ॥ २६

स सन्निपात्य स्वजनानशेषं
विज्ञाप्य वाच्यं पुनरप्युवाच ।
भिन्दन्निव स्वापयशस्तमिस्रं
विसारिणोभिर्दशनच्छटाभिः ॥ २७

यशोऽवदातेऽत्र कुले यदूनां
नाभूदधन्यः पुरुषो मदन्यः ।
यद्भौतिकं देहमहं विभर्मि
कलङ्किते कीर्त्तिमयेऽपि तस्मिन् ॥ २८

एको मतः श्लाघ्यतमः स जीव-
न्नसन्निमित्तान्ययशोरजांसि ।
वितानभूतं भुवि यस्य वृत्तं
दिगन्तरव्यापि न दूषयन्ति ॥ २९

तदोदृशोऽद्याजनि निश्चयो मे
स्यमन्तकं स्वञ्च यशःस्वमुच्चैः ।
नष्टं द्वयं वा समसुद्धरेयं
जीवन् पुरीं वा न पुनर्विशेयम् ॥ ३०

सोऽहं भवद्भ्यस्तभरो दिगन्तान्
मिथ्याभिशस्तेः परिशुद्धिहेतोः ।
भ्राम्यामि यावन्ननु मादृशानां
स्वास्थ्येन किं वाच्यमलीमसेन ॥ ३१

कठोर इत्येष न मे भवद्भिः
सर्गो निषेध्यः करुणार्द्रचित्तैः ।
अन्वेषणीयोऽद्य वनान्तरेषु
सेनान्वितेनैव मया प्रसेनः ॥ ३२

नमदखिलमहीभृन्मौलिमाणिक्यरोचिः-
पटलशिखिसहस्रज्वालनीराजिताङ्घ्रिः ।
यदुकुलपतिरेष क्षौणिमक्षीणशक्तिः
प्रवसति मयि शास्तु क्षेमवानुग्रसेनः ॥ ३३

इति निगदितवन्तं दुर्यशो माष्टुकामं
चलितमपि निषेद्धुं श्रीपतिं कोऽपि नैच्छत् ।
कथमपि यदुहृद्दा भाविनं मन्यमाना
गुरुमपि गुरवो यत् सेहिरे तद्वियोगम् ॥ ३४

इति श्रीसत्यभामापरिग्रहे काव्ये कृष्णाभिशस्तिर्नाम
प्रथमः सर्गः ।

# द्वितीयः सर्गः ।

अथ प्रसेनपदवीमन्वेष्टुं पुरुषोत्तमः ।
सैन्यघोषैर्मुखरयन् दिशः प्रस्थानमादिशत् ॥ १

स्वया चोद्भासयन् भासा सवितेवोदयाचलम् ।
आरुरोह रथं शौरिरुत्साह इव मूर्त्तिमान् ॥ २

स किरीटच्छटापुञ्जच्छुरितास्यच्छविर्बभौ ।
बालार्कघुसृणालिप्तमुखश्रीरिव वासरः ॥ ३

निर्मार्ष्टुमयशःपङ्कं प्रस्थितस्य स्थितं पुनः ।
सितच्छत्रच्छलेनास्य यशो मूर्द्ध्नि शशिप्रभम् ॥ ४

उत्पताकान्वगात् कृष्णं नगर्य्या निर्गता चमूः ।
गङ्गेव हिमवद्भूमेरुत्तरङ्गा भगीरथम् ॥ ५

भूरिमङ्गलसम्भारामिष्टपूजां गृहे गृहे ।
गुणैराराधिताः शिष्टास्तेनुस्तस्यार्थसिद्धये ॥ ६

प्रतिज्ञान्तु प्रयातस्य स्मरन्त्यस्तस्य दारुणाम् ।
कथमप्यरुधन् वाष्पं माङ्गलिक्यः पुराङ्गनाः ॥ ७

अथ सत्राजितः पुत्रौ बद्धभावा चिराद्धरी ।
दैवतार्च्चापदेशेन निर्ययौ भवनाद् बहिः ॥ ८

रथेनालोजनैरास्रैः प्राप्ता राजपथं ततः ।
अनल्पं कल्पयामास तस्य प्रस्थानमङ्गलम् ॥ ९

पुष्पवृष्टिं पथि हरेः कारयन्तीं सखीजनैः।
निर्दिश्यैनां प्रभुं वाग्मी सारथिर्दारुकोऽवदत् ॥ १०

पश्य सत्राजितः पुत्री राज्ञस्त्वदपभाषिणः।
मङ्गलन्ते तनोत्येषा सत्यभामापि यत्नतः ॥ ११

अहितस्यात्मजा देव यत्त्वैवं हितैषिणी।
जयत्याकर्षणी सेयं शक्तिस्ते गुणसम्पदः ॥ १२

इत्युक्तो विस्मयाकूतप्रीतिनिर्भरमानसः।
शौरिः सम्भावयामास स्निग्धेनालोकितेन ताम् ॥ १३

स्नेजेवार्पितया दृष्ट्या वृणानेव स्वयं प्रियम्।
सा चित्रलिखितेवासील्लुप्तशेषेन्द्रियक्रिया ॥ १४

वहिः प्रसादविशदं प्रीतिगर्भं मनोहरम्।
पाथेयमिव जग्राह दृष्टं तस्या गदाग्रजः ॥ १५

अन्योन्यनयनद्वन्द्वसङ्गतिः क्षणिका तयोः।
सान्तर्हासं तदालोकि सत्यभामासखीजनैः ॥ १६

कार्य्ये प्रतिष्ठमानस्य क्षणं दृष्टिपथे स्थिता।
प्रतिष्ठाञ्चिरमेवास्य लेभेऽन्तः कीलितेव सा ॥ १७

विम्बिताऽदीपि तन्मूर्त्तिस्तस्य मानमदर्पणे।
प्रतिमाशशभृल्लेखा पयसीव प्रसेदुषि ॥ १८

आदृष्टिपथमालोक्य सत्यभामापि वल्लभम्।
मनसा चानुगच्छन्ती देहेनावव्रते गृहम् ॥ १९

स्मरन् सत्राजितः पुत्र्याश्चेष्टितानि क्षणं हरिः।
न क्रान्तमपि पन्थानं बुबुधे किञ्चिदुन्मनाः॥ २०

उद्यमेऽस्मिन्नभूदाद्यं कौलीनं मे प्रवर्त्तकम्।
श्लाघ्यमन्यत् पुनर्मन्ये रम्यं कन्याललाम तत्॥ २१

अभावेऽप्यपवादस्य नष्टमुद्धरता धनम्।
नाराध्यः केन सत्राजित्तत्कन्याधनलिप्सया॥ २२

एवमालोच्य मनसा चचालाध्वानमच्युतः।
सेवितः प्राध्वं वातेन प्रार्थनासिद्धिशंसिना॥ २३

चुकूज मधुरं पक्षी पथि तस्य तरौ तरौ।
दृक्पथे मङ्गलायेव पुष्पिण्यपि लता बभौ॥ २४

प्रसेनतुरगक्षुण्णां पदवीमनुगच्छता।
ससैन्येन चिरात्तेन जगाहे गहनं वनम्॥ २५

ग्राश्वद्विचिन्वता तस्मिन् दृष्टः साश्वो भुवं गतः।
व्यसुः प्रसेनो हृदये वहन् सिंहनखक्षतम्॥ २६

दृष्ट्वा सिंहपदान्यत्र स्वजनाय च दर्शयन्।
व्याचष्ट व्यसनं तस्य सिंहोपक्रममच्युतः॥ २७

अथान्विष्यापि तद्देहे मणिरत्नमनाप्नुवन्।
समं प्राणैः प्रसेनस्य मेने सिंहेन तद्धृतम्॥ २८

अविश्रान्तो दधे भूयः सेनयानुगतो हरिः।
स्यमन्तकहरस्यापि हरेरन्वेषणे मनः॥ २९

ततो नृसिंहः सिंहस्य रजस्यनुसरन्मुहुः।
पदपङ्क्तिमभिव्यक्तां गहनान्तमलङ्घयत् ॥ ३०

क्षणादासीत् पुरस्तस्य नदी मेकलकन्यका।
मेखलेव भुवो देव्या मध्यभूषोपलाचिता ॥ ३१

सा स्खलद्वीचिवसना गतिभङ्गैः पदे पदे।
नर्मदा समदा शौरेः प्रमदेव मुदेऽभवत् ॥ ३२

पर्यन्तसलिलं तस्या विपुलं पुलिनम्बभौ।
स्रंसमानाम्बरं कान्ताश्रोणिविम्बं विडम्बयत् ॥ ३३

तद्वनोपवने रेवावारिशीकरवाहिभिः।
धूतनीपवनैः कृष्णो विनीताध्वश्रमो ययौ ॥ ३४

क्रमात्तटभुवं क्रामन् ददर्शारादुरुक्रमः।
व्यसुं व्यात्ताननं सिंहमवाप्तं क्षतमृक्षतः ॥ ३५

स ऋक्षस्य पदं तत्र निरीक्ष्य न मणेः पुनः।
अनुसर्त्तुं तदेवाभूद्भूयोऽपि कृतनिश्चयः ॥ ३६

दूरमाकृष्ट ऋक्षस्य पदपङ्क्त्याशयेव सः।
गिरिं विघ्नमिवोत्तुङ्गमृक्षवन्तमुपासदत् ॥ ३७

बन्धुरोपलभूयिष्ठं कण्टकाकीर्णभूरुहम्।
श्वापदाक्रान्तकान्तारं व्यालव्याप्तजलाशयम्॥३८ युग्मम्

तं बलैरन्वितः कृष्णो विलङ्घयितुमुद्यतः।
लिलङ्घयिषतः सिन्धुं धृतिं दाशरथेर्दधे ॥ ३९

तेन सैन्यानुयातेन ऋक्षमार्गानुयायिना।
समारूढ़ः परिभवं सोढ़वान्नवमृक्षवान् ॥ ४०
गिरिपृष्ठं गतश्चैकं कन्दरं सन्ददर्श सः।
पातालमिव गम्भीरं तमःसङ्घातसंवृतम् ॥ ४१
ऋक्षस्य पदवी तत्र निलिल्ये निलयान्तगा।
करणीयं किमत्रेति सैन्यानि जगदुर्मिथः ॥ ४२
हरिस्त्वनुद्धृतमणिश्चक्रमे न निवर्त्तितुम्।
अनुत्तीर्णप्रतिज्ञस्य कुतः शान्तिर्मनस्विनः ॥ ४३
नूनमृक्ष इहाविक्षत् सिंहादाच्छिद्य तं मणिम्।
तन्मयात्र प्रवेष्टव्यं बहिस्तिष्ठत सैनिकाः ॥ ४४
इत्यादिश्य बलं शौरिः स्वबाहुबलमाश्रितः।
तमन्धतमसाच्छन्नमुद्देशमभि तत्वरे ॥ ४५
आश्वासयन् परिजनान् वियोगभयविक्लवान्।
बहिः सर्व्वानवस्थाप्य प्रविवेश दरीं हरिः ॥ ४६
सिंहः प्रसेनमवधीदित्यादि * मणिसंश्रयम्।
बालमुल्लापयन्त्येव स्त्रिया तत्रेरितं वचः ॥ ४७
श्रुत्वा स मणिमासन्नं श्रमस्य च फलोदयम्।
मन्यमानः शनैस्तस्य शब्दोद्देशमुपासदत् ॥४८ युग्मम्

---

* "सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः॥"
इत्ययं श्लोकः प्रसिद्ध एव विष्णुपुराणादिषु दृश्यते।

तस्मिन्नष्टचरं ददर्श सुचिरञ्चान्विष्टमिष्टः सतां
बालक्रीड़नकीकृतं स पुरतो धात्र्या च निर्व्वर्णितम् ।
विध्वस्ताखिलकन्दरोदरतमःस्तोमैस्तमत्यद्भुतैः
प्रोद्यद्भिः किरणप्ररोहपटलैर्जाज्वल्यमानं मणिम् ॥४९

वेगादापतितः खगेन्द्र इव स त्रासान्निषण्यां स्त्रिया-
माच्छिद्याथ मणिं शिशोः करतलादुच्चं दिदृक्षुः स्थितः ।
बालोऽसौ परमास्त रोदनपरो, भल्लूकमल्लं प्रभुं
क्रोशन्ती खलु सा पुनः कृतवती धात्री तदार्त्तस्वरम् ॥५०

रुदत ऋक्षशिशोः पुरतो हसं-
स्त्वकितयोषिदवेक्षितविक्रमः ।
मणिरुचिप्रकरच्छुरिताङ्गुलिः
श्रियमधत्त नवामिव माधवः ॥ ५१

इति श्रीसत्यभामापरिग्रहे काव्ये मणिविचयो नाम
द्वितीयः सर्गः ।

## तृतीयः सर्गः ।

कुमारधात्रीकृतमार्त्तघोषणं
निशम्य सम्भावितचौरसन्निधिः ।
विशालवक्षाः स्वयमृक्षयूथपः
पदं सपद्येव तदाप जाम्बवान् ॥ १

शिलाघनेनातिदृढेन वर्ष्मणा
वनाचितेनेव ततेन रोमभिः ।
बभावसोढाभिभवोऽभ्युपेयिवान्
स ऋक्षनाथः स्फुटमृक्षवानिव ॥ २

समीक्ष्य तत्राधिगतस्यमन्तकं
रुदन्तमप्यर्भकमभ्यवस्थितम् ।
विलक्षणोत्साहभरं सुलक्षणं
स पूरुषं स्मेरमुखं विसिस्मिये ॥ ३

मनस्यकुर्व्वन्निव साहसं हरे-
र्म्महीयसासौ महसैव निर्जितः ।
पिबन्निमेषालसया दृशा भृशं
मनोरमं रूपमतिष्ठदुन्मनाः ॥ ४

स निश्चलो निर्वचनश्च ऋक्षराट्
क्षणं श्रियं तस्य विलोकयन् स्थितः।
स्यमन्तकं पाणिगतन्त्वमर्षयन्
यथाक्रमं वक्रमथ प्रचक्रमे ॥ ५

दुरासदेऽस्मिन् गिरिकन्दरान्तरे
ममालये कस्त्वमतर्कितागमः।
समुन्नतं चारु वपुः समुद्वहन्
महाकुलोत्पन्न इव प्रतीयसे ॥ ६

न भीतिलेशोऽपि यदस्ति ते मुखे
गतिश्च राजन्यकुलोचितैव यत्।
तदेष पृच्छामि कथं त्वयेदृशा
जुगुप्सितं तन्मणिलिप्सया कृतम् ॥ ७

स्त्रियाः पुरः श्येन इवामिषं यतो
मणिन्त्वमाच्छिद्य कराच्छिशोरपि।
न लज्जसे, नूनमसज्जनोऽसि त-
न्न रूपमीदृक् तु तथा समर्थितम् ॥ ८

अनुद्धता चित्तहरेयमाकृति-
र्व्यनक्ति चारित्रमुदारमेव ते।
अथापथेऽस्मिन् पदमर्पितन्त्वया
जयत्यहो लोभविजृम्भितं जने ॥ ९

रघूद्वहं पद्मदलेक्षणं प्रभं
स्मरामि यद्वीक्ष्य तवेदमाननम् ।
न तत् प्रवृत्तं महसा प्रवर्त्तते
त्वयोद्दिधि प्रह्वतयेव मे मनः ॥ १०

तदेकमभ्यर्थनमन्तरापि ते
क्षमेऽपराधं विजहीहि चापलम् ।
हरिं विनिर्जित्य बलान्मयार्जितं
त्यजार्भकक्रीड़नकं स्यमन्तकम् ॥ ११

अथाधिगन्तुं मणिरत्नमिच्छसि
स्वपौरुषे गौरवबुद्धिमादधत् ।
भणामि तन्मा स्म कथा वृथा स्मयं
न जाम्बवन्तं न विजित्य कृत्यसि ॥ १२

निशम्य तामृक्षपतेः स्फुटाक्षरां
गिरं हरिः प्रत्यवदद्विभीरमुम् ।
अवैतु मां क्षत्रकुलोद्भवं भवान्
प्रसह्य रत्नानि हरन्ति मद्विधाः ॥ १३

न केवलं क्षत्रकुलस्य सा स्थिति-
र्बलेन रत्नं क्रियते न केन वा ।
भवन्तमन्योऽपि हरिं यथा भवान्
कथं न निर्ज्जित्य तथा हरेन्मणिम् ॥ १४

स्त्रिया मिषत्या मणिमामिषं यथा
हरञ्छिशोर्नाहमपह्नुतो यतः ।
कथं तदा श्येन इवास्मि, न ह्यसौ
प्रतीक्षते सत्प्रतिपक्षमात्मनः ॥ १५

प्रसह्य हृत्वापि कराच्छिशोर्मणिं
स्थितस्य मे किं चरितं नु चौरवत् ।
न वीरचर्य्यामपभाषितं तथा
ममेङ्गितेनापि भवादृगर्हति ॥ १६

कथन्नु जानन् प्रथितां कुलस्थितिं
मणिं विहास्यामि भियात्मना हृतम् ।
अथासि शक्तस्त्वमिह स्वयंग्रहे
यतस्व,—वीर्य्यातिशयः पदं श्रियः ॥ १७

इतीरितं कंसजितोज्झितं वचो
निशम्य तस्मै स चुकोप जाम्बवान् ।
तदेहि, युध्यस्व मयेति च ब्रुवन्
भयङ्करङ्कण्टकितं वपुर्दधे ॥ १८

स मुष्टिमुद्यम्य समापतन्नुर-
स्ययोघनेनेव जघान तेन तम् ।
अकम्पितो वज्रदृढ़ेन मुष्टिना
तथैव तस्य व्यधितोत्तरं हरिः ॥ १९

समाहतेनोरसि तेन मुष्टिना
पदात् पदं जाम्बवता विचख्खले।
मुखाम्बुजेन स्मितशोभिनाच्युत-
स्तदास्य संरम्भमवर्द्धयद्भृशम् ॥ २०

स तिष्ठ तिष्ठेति वदन् खमास्थितः
क्षणं शिलावृक्षमवर्षदृक्षराट्।
असौ विकृष्टं भ्रमयन्नसिं पुनः
समस्तमप्यर्धपथे तदच्छिनत् ॥ २१

बभौ कराग्रभ्रमितेन भास्वता
स मण्डलाग्रेण विमण्डितो हरिः।
सविस्मयं जाम्बवता समीक्षितो
घनस्तड़िद्वानिव नूतनोदयः ॥ २२

अपास्तवृक्षोपलमृक्षयूथपं
नियुद्धमिच्छन्तमुपागतं पुरः।
युगेन दोष्णोर्युगदीर्घयोरसौ
समाललम्बे युगपद्भुजद्वये ॥ २३

ततोऽभवत्तत्र भुजद्वितीययो-
र्निरस्तविश्रान्तिकथं द्वयोस्तयोः।
दिनानि सप्त त्रिगुणानि भीषणं
नियुद्धमन्योन्यजयाभिलाषिणोः ॥ २४

निपीड़ितोऽन्येद्युरतीव दुर्ब्बलो
नमन्निव व्रीड़भरेण जाम्बवान् ।
निमित्तमात्माभिभवस्य वेदितुं
मुहूर्त्तविश्रान्तिमयाचताच्युतम् ॥ २५

सनिग्रहः सर्प इव स्वतेजसा
वनस्पतिः शुष्क इवान्तरग्निना ।
अदह्यतान्तर्ज्वलितेन मन्युना
पयोनिधिर्वाड़ववह्निनेव सः ॥ २६

स्थितो विविक्तेऽथ समाधिमास्थितः
पराभवप्राप्तिनिमित्तमात्मनः ।
मनुष्यदेहाश्रितमङ्गताश्रयं
विवेद तं लोकगुरुं विभुं हरिम् ॥ २७

स भक्तिनम्रोऽच्युतमभ्युपागतः
प्रसादयामास निपत्य पादयोः ।
तमस्पृशन्मूर्धनि सोऽपि सादरं
सदादृतप्रह्वजना हि साधवः ॥ २८

विचिन्तयामास तदग्रतो हरि-
र्धनापहारं स्फुटमेष नार्हति ।
स्यमन्तकायत्तविशुद्धिरस्मि यद्
व्रजेयमापृच्छ्य तदेनमोहृशम् ॥ २९

जनापवादं परिमार्ष्टुमिच्छत:
स्यमन्तकेनास्ति मम प्रयोजनम् ।
अतस्तमन्वेष्टुमिहागतस्त्वया
समागतोऽस्मीति शशंस चाशयम् ॥ ३०

तं जाम्बवानथ जगाद जितं त्वयादौ
जाने स्यमन्तकमहं न पुनस्तदर्थी ।
त्वं मे सुतामपि गृहागमनार्घ्यभूतां
गृह्णासि नाथ यदि जाम्बवतीं कृती स्याम् ॥३१

इति जाम्बवतार्थित: स्वयं
हृतचित्तोऽपि स सत्यभामया ।
प्रणय: स न भङ्गमर्हती-
त्यकरोज्जाम्बवतीकरग्रहम् ॥ ३२

अथ पाणिधृतस्यमन्तकोऽसौ
वनितां जाम्बवतीं वहन्नधिश्री: ।
निरगान्मुदमुद्वहन् गुहातो
न तथा कस्य कृतार्थता मुदे स्यात् ॥ ३३

इति श्रीसत्यभामापरिग्रहे काव्ये जाम्बवत्समागमो नाम
तृतीय: सर्ग: ।

---

# चतुर्थः सर्गः ।

मणिनैव समं वहिर्वहन्
रमणीं जाम्बवतीं यदूद्वहः ।
भजते स्म गतानुयात्रिकः
स्मृतिमात्रोपनतं रथं निजम् ॥ १

अथ वर्त्मनि गच्छतो हरे-
रनुयोगाद् गदितुं प्रचक्रमे ।
निखिलां खलु दारुकः क्रमात्
करुणां द्वारवतीगतां कथाम् ॥ २

चिरयन् हि विले स्थितो भवा
नतिवाह्येह दिनानि सप्त तत् ।
पुरमुच्चलिताः शुचा वयं
भवदत्यन्तवियोगनिश्चयात् ॥ ३

गुरुशोकभराद् गता वयं
ननु दिष्ट्याद्य मुदं भजामहे ।
स भवान् पुनरागतः स्वयं
परिदृष्टः कृतकृत्य एव यत् ॥ ४

अशिवं भवतोऽनुयात्रिका:
प्रतिगत्य स्फुटमब्रुवन् यदा ।
गुरुणा तमसा तदा पुरी
न परीता सहसैव नाभवत् ॥ ५

गुरुभिर्भवतः शुचा भृशं
वसुदेवादिभिरभ्यतप्यत ।
व्यलपच्च पुरौकसां गणो
न तु देवी विचचाल रुक्मिणी ॥ ६

न तथार्हति नाशमच्युतो
दयितो मे भगवानिति स्थिरा ।
विधुरामपि सैव मातरं
स्वयमाश्वासयदेव देवकीम् ॥ ७

विरहेण जनप्रियस्य ते
रहितानन्दभरैर्गृहे गृहे ।
अशपत् समितिः पुरौकसा-
मथ सत्राजितमत्र कारणम् ॥ ८

स च भूपतिरन्वतप्यत
त्वयि पापं कृतमात्मना स्मरन् ।
न परं सुहृदां भवादृशा
गुणवन्तो हि मता द्विषामपि ॥ ९

कथमप्यथ भीष्मकात्मजा-
वचसि प्रत्ययमाससाद यत् ।
न ततस्त्वदुपागमाशया
न खलु प्राणिति पौरमण्डली ॥ १०

अवधाय च रुक्मिणीवचो
महिलासंहतिराप्तवाक्यवत् ।
अनुतिष्ठति दैवतार्चनं
भवदासादनमेकमिच्छती ॥ ११

स्वजनैः सह सत्यभामया
परितप्तस्य गुरोरनुज्ञया ।
गिरिजान्वहमेव याच्यते
हरिरायातु पुनः पुरीमिति ॥ १२

अपवर्जितनृत्यगीतया
प्रतिषिद्धोत्सवया हृतश्रिया ।
गतभर्तृकयेव साम्प्रतं
क इव द्वारकया न दूयते ॥ १३

जनता स्फुटमद्य कौतुका-
न्न तथा नष्टचरं स्यमन्तकम् ।
पुरि देवमुपागतं यथा
कतिनं द्रक्ष्यति हर्षनिर्भरम् ॥ १४

इति जल्पति दारुके रथो
जवनैः क्रान्तपथस्तुरङ्गमैः ।
हरिणा चिरमुज्झितां पुरी-
मचिराद् द्वारवतीमुपासदत् ॥ १५

मलिनामवहीनमण्डनां
वनितां प्रोषितभर्तृकामिव ।
स ददर्श चिराददूरतः
स्वपुरीं द्वारवतीं यदूद्वहः ॥ १६

जनता पथि सङ्गता प्रभुं
क्षणमाकूतभरेण वीक्ष्य तम् ।
न शशाक चिरं समीक्षितुं
मुहुरानन्दजमश्रु मुञ्चती ॥ १७

अमलं खलु मङ्गलास्पदं
शुचिमादर्शमिव व्यलोकयन् ।
बहुमानपुरःसरं हरिं
चिरलुप्तायशसं पुरौकसः ॥ १८

हरिरेष समागतः क्षतो
ननु दिष्ट्या वसुदेव वर्द्धसे ।
इति तेऽभिनन्दुरादितो
गुरुमस्य [illegible]

कथयन् मणिसंश्रयां कथां
पुनरापादितमण्डनश्रियम् ।
प्रविवेश पुरीं यदूद्वहो
नितरां नन्दितबन्धुसंहतिः ॥ २०

अभिमानवतीश्च रुक्मिणीं
तव दासोयमिति प्रसादयन् ।
अपि जाम्बवतीं स्वमन्दिरे
नवपाणिग्रहणां न्यवेशयत् ॥ २१

हरिणा स्वयमर्पितं सद-
स्यथ सत्राजिदवाप्य तं मणिम् ।
अपराद्धमकारणं मया
महतोऽस्येति बभूव लज्जितः ॥ २२

क्रियतामनघस्य साम्प्रतं
प्रियमित्यध्यवसायमास्थितः ।
सुतयैव स सत्यभामया
हरिमाराधयितुं मतिं दधे ॥ २३

आहूय स्वयमथ केशवं वरेण्यं
सत्राजिद्दुहितरमर्पयाम्बभूव ।
साभीष्टं वरमुपलभ्य सत्यभामा
तामेनां स च वनितां मुदं वितेने ॥ २४

दत्तां स्वयंवरवधूमिव सत्यभामां
जग्राह सादरमथो मणिमर्पितन्तु ।
प्रत्यादिशन् विनयपूर्व्वमुवाच शौरि-
स्तिष्ठत्वयं भवत एव, फलं तथा नः ॥ २५

इत्थं तत्राभाष्य सत्राजितं स
स्वं वेश्मागात् सत्यभामाद्वितीयः ।
कन्यारत्नं सज्जनस्तादृगिच्छन्
नूनं तुच्छं मन्यते रत्नमन्यत् ॥ २६

तिसृभिरथ वधूभिः सेवितः सुव्रताभिः
श्रिततनुभिरिवासौ शक्तिभिः स्वाभिरेव ।
अधिगतपुरुषार्थो राजशब्दं विनापि
व्यजयत नृपसङ्घस्लाघितश्रीविशेषः ॥ २७

इति श्रीसत्यभामापरिग्रहे काव्ये परिग्रहो नाम
चतुर्थः सर्गः ।

सम्पूर्णम् ।

काव्यमिदं भगवत्यर्पितमस्तु ।

---

# সুভদ্রাহরণ কাব্য-সম্বন্ধে সুধীগণের অভিমত।

১। মহামান্য হাইকোর্টের ভূতপূর্ব্ব বিচারপতি সুপণ্ডিত স্যার শ্রীযুক্ত গুরুদাস বন্দ্যোপাধ্যায় কে টি; এম্, এ; ডি, এল্; পি, এইচ্, ডি মহোদয়;—

"I have read with much pleasure portions of your poem. I think it is matter for congratulation that there are among the graduates of our University Sanskrit scholars who can write excellent Sanskrit poems like this."

২। কলিকাতা সিটিকলেজের সংস্কৃতাধ্যাপক পণ্ডিত শ্রীযুক্ত উপেন্দ্রনাথ রায় বি, এ বিদ্যাভূষণ মহাশয়,—

"Dear Sir,

With great pleasure I have perused your Subhadra Haranam. It is an excellent epic poem and in my humble opinion even more successful than your preceding poems. You are really an ornament of our University graduates and we feel ourselves proud of you. The implied sense conveyed in some of the stanzas of this poem rivals in every respect the masterpieces of Bharabi and Magha and the words there have been so masterly collocated that they sound like those of the author of the Naishada-charita. The style is natural, easy and flowing and the metres are all masterly handled. The stanzas 25-32 of canto I.

15-40 of canto II., 16-30 of canto III. and almost all the stanzas of canto IX. may fairly be placed in my humble opinion, side by side, with the best stanzas of the master poets of ancient Sanskrit literature. The mode of delineation of characters is original and throws great credit on the author. With all my heart I pray to God to spare you and crown you with all the laurels you justly deserve."

৩। কাশীধাম হইতে পূজ্যপাদ পণ্ডিত শ্রীযুক্ত অন্নদাচরণ তর্কচূড়ামণি মহাশয় ;—

"আপনার সুভদ্রাহরণ কাব্য উপহার প্রাপ্ত হইয়া অনুগৃহীত হইয়াছি, পাঠ করিয়া সমধিক প্রীতিলাভ করিয়াছি। কাব্যখানি শব্দ-বৈচিত্র্যে ও ভাব-গাম্ভীর্য্যে প্রাচীন মধুর প্রসিদ্ধ কাব্যাবলীর সহিত স্পর্দ্ধা করিতে সম্পূর্ণ সমর্থ বলিয়া আমি মনে করি। আমি সম্পূর্ণ বিশ্বাস করি যে, আপনি এই কাব্য লিখায় কৃতকার্য্য হইতে পারিয়াছেন।

৪। নবদ্বীপনিবাসী পূজ্যপাদ পণ্ডিত সুকবি মহামহোপাধ্যায় শ্রীযুক্ত অজিতনাথ ন্যায়রত্ন কবিভূষণ মহাশয় ;—

"আপনার রুক্মিণীহরণ কাব্য প্রাপ্ত হইয়া পূর্ব্বে আদ্যন্ত পাঠ করিয়া বিশেষ প্রীতিলাভ করিয়াছিলাম। এইবার আপনার সুভদ্রা-হরণ কাব্য পাইয়া কিয়দংশ পাঠ করিয়া বুঝিলাম, ইহা সেই কবিরই কাব্য। নব্য কবিদিগের মধ্যে বর্ত্তমান সময়ে আপনার ন্যায় কবি বিরল। আশা করি, কালে আপনি মহাকবিপদবীতে আরোহণ করিতে পারিবেন।"

৫। কলিকাতা গভর্ণমেণ্ট সংস্কৃত-কলেজের প্রসিদ্ধ অধ্যাপক কালিদাস প্রভৃতি গ্রন্থপ্রণেতা পূজ্যপাদ পণ্ডিত শ্রীযুক্ত রাজেন্দ্রনাথ বিদ্যাভূষণ মহাশয় ;—

"পরশুরাম-চরিত, হৈহয়বিজয়, রুক্মিণীহরণ এই তিনখানা উপাদেয় কাব্য প্রণীত করিয়া তুমি যে অক্ষয় কীর্ত্তিমণ্ডনে বিমণ্ডিত হইয়াছ, তোমার এই অচিরপ্রকাশ সুভদ্রাহরণ কাব্যে সেই কীর্ত্তিমণ্ডন সংস্কৃত ভাষারও বিমণ্ডন হইল। তোমার কাব্য যেন আমাকে ভুলাইয়া সেই প্রাচীনযুগে লইয়া গিয়াছিল, আমি তন্ময় হইয়া পড়িয়াছিলাম। তোমার লেখনীধারণ সার্থক হইয়াছে।"

৬। কলিকাতা মেট্রোপলিটান ইন্‌ষ্টিটিউসনের প্রিন্সিপাল সুপণ্ডিত শ্রীযুক্ত সারদারঞ্জন রায় বিদ্যাবিনোদ এম্, এ মহাশয় ;—

"লেখা নবীনের মত বোধ হয় না এ অল্প প্রশংসার কথা নহে। ভাষার নিপুণতায় আপনার আসন অতি উচ্চে সন্দেহ নাই।"

৭। কলিকাতা হইতে সংস্কৃত সাহিত্যে বিচক্ষণ পণ্ডিত কবিরাজ শ্রীযুক্ত গণনাথ সেন এম্, এ, এল্ এম্ এস্ মহোদয় লিখিতেছেন ;—

"I got both your books রুক্মিণীহরণ and সুভদ্রাহরণ duly. I was charmed with your genuine classic style and exquisite grace of diction. I congratulate you heartily on your rare gift of being able to write true Sanskrit poetry·······I have only to add

पुराणकविरविमण्डलकलितात्मापि तज्जयी जयति ।
हिममयो यं चन्द्रः कवितामृतनिर्झरीसविता ॥"

এতদ্ব্যতীত আরও অনেকে সুভদ্রাহরণকাব্য সম্বন্ধে স্বতঃ-প্রবৃত্তভাবে প্রশংসাপত্র দিয়াছেন। গ্রন্থকার তাঁহাদের সকলের নিকটই কৃতজ্ঞ। যশোহরের সুপ্রসিদ্ধ হিন্দু পত্রিকার ১৩২০ জ্যৈষ্ঠ সঙ্খ্যায়, জগৎপুরের সংস্কৃত আর্য্যপ্রভা পত্রিকার চতুর্থবর্ষের ৬ষ্ঠ সঙ্খ্যায় ও ভট্টপল্লীর সংস্কৃত বিদ্যোদয় পত্রিকার ১৩১৯ মাঘ হইতে চৈত্র সঙ্খ্যায় ঐ কাব্যসম্বন্ধে অনুকূল সমালোচনা প্রকাশিত হইয়াছে। স্থানাভাবে ঐ সমস্ত অভিমত এস্থলে মুদ্রিত হইল না। রুক্মিণীহরণকাব্য সম্বন্ধে সুধীগণের অভিমত স্বতন্ত্র মুদ্রিত পুস্তিকায় দ্রষ্টব্য।

উপসংহারে বক্তব্য, বর্ত্তমান সময়েও সংস্কৃত কাব্যপ্রণয়নে লেখককে যাঁহারা উৎসাহিত করিয়া আসিতেছেন, তন্মধ্যে কলি-কাতা সংস্কৃত কলেজের প্রসিদ্ধ অধ্যাপক পূজ্যপাদ মহামহোপাধ্যায় পণ্ডিত শ্রীযুক্ত প্রমথনাথ তর্কভূষণ মহাশয় ও পাবনা দর্শন-বিদ্যা-লয়ের অধ্যাপক পূজ্যপাদ পণ্ডিত শ্রীযুক্ত ফণিভূষণ তর্কবাগীশ মহাশয়ের নাম বিশেষভাবে উল্লেখযোগ্য। লেখকের প্রথম কাব্য পরশুরাম-চরিত প্রথমোক্ত অধ্যাপক মহাশয়ের পাদমূলে অলঙ্কারাদি-শাস্ত্র অধ্যয়নের সময় প্রকাশিত হয়, এবং তিনি ঐ কাব্যের ও তৎপরবর্ত্তী হৈহয়বিজয় কাব্যের পাণ্ডুলিপি দেখিয়া দেন। শেষোক্ত অধ্যাপক মহাশয়ের নিকট অনেক সময়ে শাস্ত্রোপদেশ পাইয়া থাকি এবং তিনিও যথাক্রমে লেখকের রুক্মিণীহরণ, সুভদ্রাহরণ ও বর্ত্তমান সত্যভামাপরিগ্রহ কাব্যের পাণ্ডুলিপি দেখিয়া দিয়াছেন।

বিনীত গ্রন্থকার।